***प्रथम संस्कृत संस्करण :*** अगस्त 2015 श्रावण 1937
***पुनर्मुद्रण :*** जून 2019 ज्येष्ठ 1941; जुलाई 2020 श्रावण 1942


**PD 153T RPS**

**पुस्तकमाला निर्माण समिति**

कंचन सेठी, कृष्ण कुमार, ज्योति सेठी, टुलटुल विश्वास, मुकेश मालवीय, राधिका मेनन, शालिनी शर्मा, लता पाण्डे (स्वर्गीय), स्वाति वर्मा, सारिका वशिष्ठ, सीमा कुमारी, सोनिका कौशिक, सुशील शुक्ल

**सदस्य-समन्वयक** – लतिका गुप्ता

**संपादक ( संस्कृत )** – कृष्णचन्द्र त्रिपाठी

**संस्कृत अनुवाद** – रणजित बेहेरा, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**चित्रांकन, सज्जा तथा आवरण**– निधि वाधवा

**संस्कृत समीक्षा समिति**

यज्ञ दत्त शर्मा, सेवानिवृत *प्रोफ़ेसर संस्कृत*, दिल्ली विश्वविद्यालय, दिल्ली; कृष्ण चन्द्र त्रिपाठी, *प्रोफ़ेसर संस्कृत*, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी. नई दिल्ली; राजेश्वर प्रसाद मिश्र, *प्रोफ़ेसर संस्कृत*, संस्कृत पालि एवं प्राकृत विभाग, कुरुक्षेत्र विश्वविद्यालय, हरियाणा; भागीरथी नन्द, *एसोसिएट प्रोफ़ेसर*, साहित्य विभाग, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, कटवारिया सराय, नई दिल्ली; पतञ्जलि कुमार भाटिया, *अध्यक्ष*, संस्कृत विभाग, पी.जी.डी.ए.वी. कॉलेज, दिल्ली विश्वविद्यालय, नई दिल्ली; सूर्य नारायण नन्द, *अतिथि अध्यापक*, सेंट स्टीफेन्स कॉलेज, दिल्ली विश्वविद्यालय, दिल्ली; हरेकृष्ण अगस्ति, *असिस्टैंट प्रोफ़ेसर*, व्याकरण विभाग, कवि कुलगुरु कालिदास संस्कृत विश्वविद्यालय, नागपुर, महाराष्ट्र; सुगन्ध पाण्डेय, *टी.जी.टी. संस्कृत*, केन्द्रीय विद्यालय, काशीपुर, ऊधम सिंह नगर, उत्तराखण्ड; निर्मल मिश्र, *टी.जी.टी. संस्कृत*, केन्द्रीय विद्यालय, नरेला, दिल्ली; डॉ. जतीन्द्र मोहन मिश्र, *सह आचार्य*, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**आभार ज्ञापन**

प्रो. बी.के.त्रिपाठी, *निदेशक*, एन.सी.ई.आर.टी., नई दिल्ली; कृष्ण कुमार, *पूर्व-निदेशक*, एन.सी.ई.आर.टी., नई दिल्ली; वसुधा कामथ, *पूर्व-संयुक्त-निदेशक*, केन्द्रीय शैक्षिक प्रोद्योगिकी संस्थान, एन.सी.ई.आर.टी., नई दिल्ली; उमा शंकर शर्मा ऋषि, *पूर्व विभागाध्यक्ष*, संस्कृत विभाग, पटना विश्वविद्यालय, पटना, बिहार; के. के. वशिष्ठ, *पूर्व-विभागाध्यक्ष*, प्रारंभिक शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

80 जी.एस.एम. पेपर पर मुद्रित

सचिव, राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद्, श्री अरविन्द मार्ग, नयी दिल्ली 110 016 द्वारा प्रकाशन प्रभाग में प्रकाशित तथा श्री वृंदावन ग्राफ़िक्स प्रा. लि., ई–34, सैक्टर–7, नोएडा 201301 (उ.प्र.) द्वारा मुद्रित।

**ISBN** 978-93-5007-353-7 (वर्षा-सैट)
978-93-5007-793-1

वर्षा-क्रमिक-पुस्तकमाला प्राथमिककक्षायाः बालानां कृते वर्तते। अस्याः अभिप्रायः – 'बोधनेन सह' स्वयंपठनस्य अवसरपरिकल्पनं वर्तते। अस्याः पुस्तकमालायाः कथाः चतुर्षु स्तरेषु पञ्चसु कथावस्तुषु च विभक्ताः सन्ति। 'वर्षा' बालानाम् सानन्दं पठने स्थायिपाठकत्वेन निर्माणे च सहायिका भविष्यति। बालेभ्यः दैनन्दिन्यः लघुलघुघटनाः कथा इव रुचिकराः प्रतीयन्ते। अतः वर्षा-मालिकायाः सर्वाः कथाः दैनिकजीवनस्य अनुभवान् आधृत्य वर्तन्ते। लघुबालानां पठनाय प्रचुरमात्रायां पुस्तकानि उपलब्धानि स्युरिति अस्याः पुस्तकमालायाः अपरमुद्देश्यं वर्तते।

वर्षा-पुस्तकमाला बालानां पठन-शिक्षणे, स्थायिपाठकनिर्माणे, सूचनासंग्रहणे पाठ्यचर्यायाः प्रत्येकं क्षेत्रे च सहायिका भविष्यति। शिक्षकाः वर्षा-मालिकां कक्षायाम् तथा स्थापयेयुः येन बालाः सुखेन पुस्तकानि ग्रहीतुं शक्नुयुः।



**एन.सी.ई.आर.टी. के प्रकाशन प्रभाग के कार्यालय**

- एन.सी.ई.आर.टी. कैंपस, श्री अरविंद मार्ग, नयी दिल्ली 110 016 **फोन** : 011-26562708
- 108, 100 फीट रोड, हेली एक्सटेंशन, होस्डेकेरे, बनाशंकरी III स्टेज, बंगलूरु 560 085 **फोन** : 080-26725740
- नवजीवन ट्रस्ट भवन, डाकघर नवजीवन, अहमदाबाद 380 014 **फोन** : 079-27541446
- सी.डब्ल्यू.सी. कैंपस, निकट: धनकल बस स्टॉप पनिहटी, कोलकाता 700 114 **फोन** : 033-25530454
- सी.डब्ल्यू.सी. कॉम्प्लैक्स, मालीगाँव, गुवाहाटी 781 021 **फोन** : 0361-2674869

***प्रकाशन सहयोग***

अध्यक्ष, प्रकाशन प्रभाग : *अनूप कुमार राजपूत*
मुख्य उत्पादन अधिकारी : *अरुण चितकारा*
मुख्य संपादक : *श्वेता उप्पल*
मुख्य व्यापार प्रबंधक : *विपिन दिवान*

# गोधूमाः



जमालः



माता



पिता



एकस्मिन् दिने जमालस्य माता गोधूमान् क्षालितवती।

गोधूमाः अधिकाः आसन्।

गोधूमाः जलेन क्षालिताः अतितरां भासन्ते स्म।

जमालः मात्रा सह गोधूमान् क्षालितवान्।





माता गोधूमान् अङ्गने शोषितवती।
सा भूमौ प्रच्छद-द्वयं प्रसारितवती।
प्रच्छदयोः उपरि गोधूमाः प्रसारिताः।
जमालः अपि मात्रा सह गोधूमान् प्रसारितवान्।



माता श्रान्ता भूत्वा सुप्तवती।

जमालः हृष्टः जातः।

सः आर्द्रगोधूम-कणैः पर्वतान् निर्मितवान्।

एकस्मिन् प्रच्छदे गोधूमानां पञ्च पर्वताः रचिताः।



जमालः काँश्चित् गोधूमकणान् मुखे निक्षिप्तवान्।
सः आर्द्रान् गोधूमान् चर्वितवान्।
भृशं चर्वितवान्।
भृशं चर्वितवान्।



जमालः पुत्तलिका इव अभवत्।
सः हस्तौ प्रसार्य अतिष्ठत्।
तिस्रः चटकाः गोधूमकणान् खादितुम् आगताः।
जमालः चटकाः अपश्यत् किन्तु ताः न अवारयत्।



जमालः गोधूमेषु अङ्गुल्या स्व–नाम अपि लिखितवान्।
पूर्वं सः स्व–नाम संस्कृतेन अलिखत्।
ततः जमालः अंग्रेजी–भाषया अपि स्व–नाम लिखितवान्।
सः पित्रोः नाम अपि अलिखत्।




जमालः करतले काँश्चन गोधूमकणान् घर्षितवान्।
भृशं घर्षितवान्।
भृशं घर्षितवान्।
तस्य करतले रक्त-वर्णे सञ्जाते।



जमालः श्रान्तः सन् तत्र एव संविष्टवान्।
सः संविश्य अपि गोधूमेषु अङ्गुलिं चालितवान्।
गोधूमेषु अङ्गुलिं चालयन् जमालः निद्रां गतः।
सः सुप्तवान्।



माता जमालम् अङ्के धृतवती।
सा तं नीत्वा शय्यायां शायितवती।
जमालः प्रगाढ–निद्रायाम् आसीत्।
सः चिरं सुप्तवान्।



यदा जमालस्य नेत्रे उन्मीलिते तदा सः शय्यायाम् आसीत्।
सः उत्थाय इतस्ततः गोधूमान् अन्विष्टवान्।
जमालः तु प्रकोष्ठस्य अन्तः आसीत्।
गोधूमाः अङ्गने आसन्।



जमालः धावित्वा अङ्गनं गतवान्।
सः तत्र गोधूमान् अन्विष्टवान्।
किन्तु गोधूमाः तत्र नैव आसन्।
प्रच्छद-द्वयम् अपि विलुप्तम् आसीत्।



जमालः मातुः समीपं गतवान्।

माता गोधूम-कणान् चिनोति स्म।

पिता अपि गोधूम-कणान् चिनोति स्म।

जमालः पुनः गोधूमैः क्रीडितुम् आरभत।





माता पिता च गोधूमान् एकस्मिन् समुद्गके पूरितवन्तौ।
पिता समुद्गकं धृतवान्।
माता तस्मिन् गोधूमान् क्षिप्तवती।
जमालः अपि समुद्गके गोधूमान् क्षिप्तवान्।





ततः पिता गोधूमानां पेषणाय अगच्छत्।
जमालः अपि तेन सह अगच्छत्।
सः गोधूमानां पेषणयन्त्रं चलत् अपश्यत्।
जमालाय गोधूम-चूर्णस्य सुगन्धः अतितराम् अरोचत।





जमालः पिता च गोधूमचूर्णम् आनीय गृहं प्रत्यागतौ।
तौ गोधूम-चूर्णस्य समुद्गकं पाकशालायां स्थापितवन्तौ।
माता सद्यः पिष्टं गोधूम-चूर्णं संयुतवती रोटिकाः च पक्ववती।
जमालः उष्णोष्णां रोटिकाम् अखादत्।

